॥ ब्रह्मस्तोत्रम् अथवा पञ्चरत्नस्तोत्रम् ॥

ॐ नमस्ते सते सर्वलोकाश्रयाय
नमस्ते चिते विश्वरूपात्मकाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने निर्गुणाय ॥ १॥

त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत्कारणं विश्वरूपम् ।
त्वमेकं जगकर्तृपातृप्रहार्तृ
त्वमेकं परं निश्चलं निर्विकल्पम् ॥ २॥

भयानां भयं भीष्हणं भीष्हणानां
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैः पदानां नियन्तृ त्वमेकं
परेशं परं रक्षणं रक्षणानाम् ॥ ३॥

परेश प्रभो सर्वरूपाविनाशिन्
अनिर्देश्य सर्वेन्द्रियागम्य सत्य ।
अचिन्त्याक्षर व्यापकव्यक्ततत्त्व
जगद्भासकाधीश पायादपायात् ॥ ४॥

तदेकं स्मरामस्तदेकं भजाम-
स्तदेकं जगत्साक्षिरूपं नमामः ।
सदेकं निधानं निरालम्बमीशं
भवाम्भोधिपोतं शरण्यं व्रजामः ॥ ५॥

॥ इति महानिर्वाणतंत्रे ब्रह्मस्तोत्रं एवं पञ्चरत्नस्तोत्रं समाप्तम् ॥